# गायत्र्यष्टकम्

## अथ श्री गायत्री अष्टकम्

उषः कालगम्यामुदात्तस्वरूपां
अकारप्रविष्टामुदाराङ्गभूषाम्
अजेशादिवंद्यामजार्चाङ्गभाजां
अनौपम्यरूपां भजाम्यादिसंध्याम् १
सदाहंसयानां स्फुरद्रत्नवस्त्रां
वराभीति हस्तां खगाम्नायरूपाम्
स्फुरत्साधिकामक्षमालां च कुंभं
दधानामहं भावये पूर्वसंध्याम् २
स्फुरच्चन्द्रकान्तां शरच्चन्द्रवक्त्रां
महाचन्द्रकान्ताद्रिपीनस्तनाढ्याम्
त्रिशूलाक्षहस्तां त्रिनेत्रस्य पत्नीं
वृषारूढपादां भजे मध्यसंध्याम् ३
सदासामगानप्रियां श्यामलाङ्गीं
अकारान्तरस्थां करोल्लासिचक्राम्
गदापद्महस्तां स्वनत्पाञ्चजन्यां
खगेशोपविष्टां भजेमास्तसंध्याम् ४
प्रगल्भस्वरूपां स्फुरत्कंकणाढ्यां
सदालम्बमानस्तनप्रान्तहाराम्
महानीलरत्नप्रभाकुण्डलाढ्यां
स्फुरत्स्मेरवक्त्रां भजे तुर्यसंध्याम् ५
हृदंभोजमध्ये पराम्नाय नीडे

सुखासीनसद्राजहंसां मनोज्ञाम्
सदा हेमभासां त्रयीविद्यमध्यां
भजामस्तु वामो वदाम स्मरामः ६
सदा तत्पदैस्तूयमानां सवित्रीं
वरेण्यां महाभर्गरूपां त्रिनेत्राम्
सदा देवदेवादिदेवस्य पत्नीं
महन्धीमहीत्यादिपादैकजुष्टाम् ७
अनाथं दरिद्रं दुराचारयुक्तं
शतं स्थूलबुद्धिं परं धर्महीनं
त्रिसंध्यां जपध्यानहीनं महेशि
प्रसन्नं च मां पालयत्वं कृपार्हम् ८
इतीदं भुजङ्गं पठेद्यस्तु भक्त्या
समादाय चित्ते सदा तां पराज्ञाम्
त्रिसंध्यस्वरूपां त्रिलोकैकवन्द्यां
समुक्तो भवेत्सर्वपापैरजस्रम् ९